recital of the Lord's Name is synthesized by holding the highest form of the latter as the contemplation of oneself as Rāma with the *bhāvanā* '*rāmo 'ham*' and the pressing into service of the doctrine of OM with which the Lord's Name is integrated, Upaniṣadbrahman introduces also the idea of the Name functioning at two levels, as means and as end. As we have seen, although not directly, the trend of several old ideas on *nāman*, on OM, on Śabda-brahman, on Bhakti, and on the efficacy of the Lord's Name inspired Upaniṣadbrahman to the formation of the leading idea of the present text, the *nāman* as *upāya* and *upeya*. It is in the nature of things that what is, at the earlier stages of endeavour, the means becomes in the end the very substance of the thing or the very character of its being. Śaṃkara says in his *Gītābhāṣya* when dealing with the characteristics of the *sthitaprajña* (II. 55):

स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि, तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात्, यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि ।

and the *Bhāgavata*[1] emphasizes, in its own eloquent manner, how even in the supreme state of

[1] I. 7. 10:

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥

II. 1. 7:

प्रायेण मुनयो राजन् निवृत्ता विधिषेधतः ।
नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥



self-realization, liberated souls for ever love God, serving Him and singing of Him, without any purpose (*ahaituka*), involuntarily—the most natural form of their free activity in that state. It is in this state and in this form that Bhakti and the recital or contemplation (*kīrtana*, *anusaṃdhāna* or *bhāvanā*) of the Lord's Name is the end, *upeya*. The Name itself which is identified with Brahman and one's own self, in this state, is endowed with consciousness, as the *śabda* is for the Śabda-brahmavādin-s; our author thus refers to *nāman* as *nāma-cit*.

## IV

### MANUSCRIPT MATERIAL

The edition of the work presented here is based on a copy taken by the present writer from the manuscript of the text in the library of the author in his *maṭha* at Kāñcī; and the text has been collated with a palm-leaf MS. of the work preserved in the Adyar Library (Catalogue, vol. II, 1928, p. 195, No. 34 D 15 = 75589).[1]

There is no noteworthy difference between the Kāñcī and Adyar MSS.; the minor variations such as are to be seen have been given in the footnotes.

[1] There is only one MS. of this work in Adyar; the entries *Upeyabhaktivivekavivṛti* on the same page of vol. II and *Upeyanāmavivekavyākhyā* on p. 189 of vol. I under Stotra-s do not represent a different work or MS.

The quotations which Upaniṣadbrahman gives from the Upaniṣad-s, big and small, have been identified in the footnotes. Most of these occur often in Upaniṣadbrahman's own commentaries on the Upaniṣad-s. Only two quotations from the Upaniṣad-s and one from a non-Upaniṣadic source remain to be traced. The author refers also to the other work of his, the *Rāmataraṅgacandrikā*,[1] and to the *Guṇatrayaviveka* of Svayaṃprakāśa.

---

[1] See *New Catalogus Catalogorum*, vol. II, p. 366 b (*Rāmataraṅgacandrodaya*). An additional MS. of this is described anonymously under the title *Taraṅga* in the *Descriptive Catalogue of Sanskrit Manuscripts* in the Curator's Office Library, Trivandrum, vol. VII, No. 1222.

श्रीरामाय नमः

## उपेयनामविवेकव्याख्योपेतः

## नामार्थविवेकः

## श्रीमदुपनिषद्ब्रह्मयोगिविरचितः

ओं श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः ।[1]

[१]सर्वापह्नवतः शिष्टपरमाद्वैतवैभवा ।
उपेयदिव्यश्रीरामचन्द्रनामचिदस्म्यहम् ॥
नत्वा श्रीदेशिकं सद्यः कैवल्यसुखमिच्छताम् ।
**उपेयनामविवेक**व्याख्येयं संप्रणीयते ॥

इह खलु परमदयापारसागररूपेयं भगवती लीलाविभूतिर्युगपत्स्वांशजप्राणिपटलनिर्विशेषब्रह्मावगतिसाधनमुपायोपेयात्मक**नामार्थविवेक**मारभमाणा सती आदौ प्रारिप्सितग्रन्थपूरणाय शिष्टजनबहुमाननाय च स्वाभिन्नश्रीरामचन्द्रोपेयनामचिदैक्यानुसंधानपूर्वकं श्रीगुरुं नमस्कृत्य,

'शास्त्रैकदेशविषयं शास्त्रकार्यान्तरे स्थितम् ।
सारांशस्पष्टकथनं यत्तत् प्रकरणं विदुः ॥'

इति स्मृत्युक्तसर्वलक्षणार्थसंपन्नं[२] सानुबन्धचतुष्टयमुपेयनामार्थविवेकप्रकरणं प्रतिजानीते **स्वेति** द्वाभ्याम्—

[१] अ. (अडयार्-मातृका) इतः पूर्ववर्ती भागो नास्ति. [२] अ. °लक्षणसंपन्नं.

---

[1] This is repeated.

**स्वाविद्यापदतत्कार्यजातारोपापवादधीः ।**
**यस्मिन् विराममगमत् तत्त्रिपादस्मि रामचित् ॥ १ ॥**
**गुरुं नत्वा ब्रह्ममात्रावशेषसुखमिच्छताम् ।**
**तत्प्राप्त्युपायदिव्यश्रीरामनामार्थ उच्यते ॥ २ ॥**

इति । निर्विशेषचिन्मात्रं स्वशब्देनोच्यते । तद्धि निरङ्कुशभावरूपं, तदतिरिक्तस्य निष्प्रतियोगिकाभावरूपतया या शशविषाणवदविद्यमाना सा स्वाविद्या तद्रूपेण पद्यते, दृढमपरोक्षीक्रियत इति स्वाविद्यापदं तथाविधानन्तकोटिब्रह्माण्डपटलं तत्कार्यशब्देनोच्यते । तदारोपभागो व्यष्टिसमष्टितो द्विधा भिन्नजाग्रत्-स्वप्नाभिधानद्वैतप्रपञ्चः । तदपवादभागो व्यष्टिसमष्ट्यात्मकसुषुप्तिमूर्च्छामरणसमाधिनित्यनैमित्तिकप्राकृतात्यन्तिकप्रलयास्पदत्वेन भातो द्वैतप्रपञ्चः । तदुभयं तत्कल्पकधीरपि निर्विशेषचिन्मात्रे यस्मिन् विराममपह्नवमगमत् । निष्प्रतियोगिकाभावस्याधिष्ठेयतावैरल्येन[१] निरधिष्ठानचैतन्यं त्रिपादुच्यते । त्रिपाद्रूपेण चिन्मात्रतया राजते महीयत इति त्रिपाद्रामचिदस्मि । चिन्मात्रेणावस्थितोऽस्मीत्यर्थः; 'सर्ववर्जितचिन्मात्रम्'[1] इति श्रुतेः । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि'[2] इति श्रुत्यनुरोधेन निर्विशेषपरमाद्वैतज्ञानोपदेष्टारं गुरुं स्वात्मरूपमपि श्रद्धाभक्तिपुरःसरं नत्वा ब्रह्ममात्रावशेषप्रबोधात् यत् सुखं लभ्यते तदर्थिनां तादृशसुखप्रापकोपायभूतदिव्यश्रीरामनामार्थः प्रकरणमुखेनोच्यत इत्यर्थः ।

[१] अ. अधिष्ठेयतया वैरल्येन.

---

[1] तेजोबिन्दु°, २. २५; तत्र 'भववर्जितचिन्मात्रम्' इति पाठः । ग्रन्थकृतैव माण्डूक्यव्याख्याने (अडयार्-प्रकाशनं, पृ. २२९) त्रिपाद्विभूतिनारायणोपनिषद्व्याख्यायां च (अडयार्-प्रकाशनं, वैष्णवोपनिषदः, पृ. ९६) 'सर्ववर्जित°' इति पाठ उद्धृतः । एवमन्यत्रापि तदीयोपनिषद्व्याख्यासु.

[2] प्रश्न°, ६. ८.



दिव्यश्रीरामनामार्थ इति यत् प्रतिज्ञातं तदर्थमाविष्करोति **देदीप्यमानेति** द्वाभ्याम्—

**देदीप्यमानरूपत्वाद् दिव्यश्रीर्मुक्तिरीरिता ।**
**तद्रूपतो राजमानं महः श्रीराम ईरितम् ॥ ३ ॥**[1]

इति । दिव्यश्रीपदं व्याकरोति—**देदीप्येति** । दिव्यश्रियः स्वातिरिक्तसाधननैरपेक्ष्येण स्वयंप्रकाशतया देदीप्यमानरूपत्वाद् दिव्यश्रीशब्देन विकलेबरमुक्तिरभिधीयते । तस्या विदेहमुक्तेः स्वरूपतः सर्वत्र यन्महो राजमानं तदेव श्रीरामशब्देनेरितं, श्रुतिभिरित्यर्थः । 'निरस्ताविद्यातमोमोहोऽहमेवाहम्'[2],

'ओं तत्सद्यत् परं ब्रह्म रामचन्द्रश्चिदात्मकः ।
सोऽहमों तद्रामभद्रपरंज्योती रसोऽहमोम् ॥'[3]

तत्परः परमपुरुषः पुराणपुरुषोत्तमो नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दानन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मीत्यादि ।

नामार्थस्वरूपमाह **श्रीरामेति**—

**श्रीराम एव नाम स्यान्नाभिधानमुपेयतः ।**
**उपेयरूपावस्थानं नामार्थ इति विश्रुतम् ॥ ४ ॥**

[1] ग्रन्थकृतैव स्वीयसंन्यासोपनिषद्व्याख्यायामुदाहृतोऽयं श्लोकः । किंतु तत्र पूर्वार्धं भिन्नं दृश्यते—

'स्वान्याश्रयपह्नवात् सिद्धा या मुक्तिश्रीर्विजृम्भते ।
तद्रूपतो राजमानं महः श्रीराम ईरितम् ॥

इति नामार्थविवेकोक्तेश्च' (अडयार्-प्रकाशनं संन्यासोपनिषदः, पृ. २५३).

[2] रामोत्तरतापिनी°, २. १५. 'अहमेवेति संभाव्योऽहम्' इति पूर्णः पाठः (अडयार्-प्रकाशनं, वैष्णवोपनिषदः, पृ. ३३०).

[3] तत्रैव, २. १६.

इति । पूर्वोक्तविशेषणविशिष्टश्रीराम एव नाम स्यात् । श्रीरामस्य नाम इति नाभिधानम् । कुतः ? नाम्न उपेयत्वात् । अर्थशब्दार्थ उच्यते । निर्विशेषत्वेनोपेयभूतदिव्यश्रीरामनामस्वरूपमात्रावस्थानं नामार्थ इति विश्रुतम् अभिहितम् । 'अभिधानाभिधेययोरेकत्वम्'[1] इति भगवत्पादाचार्यैरित्यर्थः ।

विषयाद्यनुबन्धचतुष्टयं ग्रन्थतः कीर्तयति **विषयेति** द्वाभ्याम्—

**विषयः स्वेतरग्राससत्तासामान्यमीरितः ।**
**प्रयोजनं ब्रह्ममात्रावशेषणतया स्थितिः ॥ ५ ॥**
**संबन्धः प्रतिपाद्यादिः शास्त्रचिन्मात्रयोर्मिथः ।**
**विकलेबरकैवल्यानन्दकामोऽधिकार्यसौ ॥ ६ ॥**[2]

इति । दिव्यश्रीरामनामार्थशब्देन स्वेतरसत्त्वासत्त्वविभ्रमग्रासं सदुच्यते । सदेव सत्ता, तत्र विशेषगन्धाभावात् सैव सामान्यम् । तदेवास्य प्रकरणस्य विषयो भवति । तन्मात्रतयावशेषणं प्रयोजनम् । ब्रह्मप्रकरणयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः । प्रकरणप्रतिपाद्यरूपविकलेबरकैवल्यानन्दस्वरूपावस्थानं यः कामयते सोऽसावधिकारीति विज्ञायत इत्यर्थः ।

कैवल्यकामनाप्रभवाधिकारसत्त्वेऽपि तदाप्तिः कथमित्याशङ्क्याह—

**उक्ताधिकारसंपन्नयोगिनोपेयनामचित् ।**
**स्वावशेषतयावाप्तुं शक्या स्यात् स्वस्वरूपतः ॥ ७ ॥**

इति । परमाद्वैतशास्त्रनिरूपितानुबन्धचतुष्टयालंकारव्यष्टिसमष्टिप्रपञ्चापवादाधारप्रत्यक्परचिदैक्यप्रतिपादकाद्वैतशास्त्रोक्तनित्यादिसाधनचतुष्टयसंपत्त्यासादितसर्व -

[1] शांकरे माण्डूक्यभाष्ये 'ओमित्येतदक्षरम्' इत्युपक्रमवाक्यव्याख्याने.

[2] श्लोकद्वयमिदं नामार्थविवेकनामनिर्देशपूर्वकं ग्रन्थकृता स्वीयेशोपनिषद्व्याख्यायामुदाहृतम् (अड्यार्-प्रकाशनं पृ. ३).



वेदान्तश्रवणमननप्रादुर्भूतज्ञानविज्ञानाधिकारसंपन्नयोगिना 'ब्रह्ममात्रमसन्न हि'[1] इति श्रुत्यनुरोधेन समस्तोपायापह्नवसिद्धोपेयनामचित् स्वावशेषतयावाप्तुं शक्या स्यात् । अन्यदन्येनाप्तुं शक्यते, न हि स्वयं स्वेन इत्याशङ्क्य तत्र हेतुमाह **स्वेति** । स्वस्वरूपतः स्वावशेषस्य स्वस्वरूपत्वादित्यर्थः ।

हेत्वर्थं विवृणोति—

**आप्तिः स्वमात्रावशेषो न हि ग्रामान्तराप्तिवत्**[१] **।**[2]

इति । स्वाज्ञानप्रभवस्वातिरिक्तं स्वज्ञानेनापह्नवतां याति, तदा स्वशब्दविशेषणाज्ञानज्ञानापह्नवसिद्धस्वमात्रावशेषतैव आप्तिरित्युपचर्यते । न हि ग्रामाद् ग्रामान्तराप्तिवदित्यर्थः ।

एवं कथमवगम्यत इत्यत्र 'य एवं निर्बीजं वेद निर्बीज एव स भवति'[3] इति श्रुतिमर्थतः पठति—

**निर्बीजब्रह्मविज्ञानान्निर्बीजाप्तिः श्रुतीरिता ॥ ८ ॥**

इति । विशेषजातं बीजं यस्मान्निर्गतं तन्निर्बीजम्, तच्च तद् ब्रह्म चेति निर्बीजब्रह्म स्वमात्रमपि [4]असल्लौकिकाद्यष्टदृष्ट्यवष्टम्भतः सद्द्वितीयमिव भातम् ।

[१] उ. ब्र. मठमातृका—ग्रामान्तरावाप्तिवत् .

[1] तेजोबिन्दु°, २. २५. 'सर्वं चिन्मात्रमेव हि' इति तत्र पाठः । ग्रन्थकृतैव माण्डूक्यव्याख्याने (अड्यार्-प्रकाशनं, पृ. २२९) अन्यत्र बहुत्र च 'ब्रह्ममात्रम्' इति पाठ उद्धृतः.

[2] श्लोकार्धमिदं ग्रन्थकृता स्वीयमहोपनिषद्व्याख्यायाम् (अड्यार्-प्रकाशनं, पृ. २४३) उदाहृतम् । नामार्थविवेकोक्तिरित्यपि तत्र दृश्यते.

[3] सुबाल°, ९. १५.

[4] एताश्चाष्टदृष्टयः असल्लौकिकाद्या इति ग्रन्थकृता स्वीयोपनिषद्व्याख्यासु बहुत्रोक्ताः । किंतु अष्टानां प्रत्येकं नाम क्वचिदपि नोदाहृतम् । दृश्यन्तां केनमाण्डूक्यमुक्तिकत्रिपाद्विभूतिनारायणोपनिषद्व्याख्याः (अड्यार्-प्रकाशनानि, दशोपनिषदः, प्रथमो

पुनरसल्लौकिकाद्यष्टदृष्ट्यपह्नवसिद्धनिर्बीजब्रह्मस्वमात्रमिति विज्ञानात् निर्बीजं ब्रह्म निर्बीजमेव भवति, न ह्यन्यज्ञानादन्यभावापत्तिः। एवं स्वज्ञानेन स्वभावापत्तिराप्तिरिति श्रुतिभिरीरितेत्यर्थः।

एवंविधनिर्विशेषज्ञानासंभवमाशङ्क्य परिहरति **अनादीत्यादिनवभिः**—

**अनादिकालमारभ्य स्वाविद्यापल्लयावधि[1]।**
**नामरूपभिदाशोभि [2]नानाब्रह्माण्डगर्भितम् ॥ ९ ॥**
**विराड्ढिरण्यगर्भेशचित्सामान्यैरधिष्ठितम्।**
**तत्तदण्डोचितब्रह्मविष्णुरुद्रायुतान्वितम् ॥ १० ॥**
**विचित्रकर्मावरणपुण्यपापभ्रमोज्ज्वलम्।**
**नानाविधप्राणिजातजुष्टमाविद्यकं पदम् ॥ ११ ॥**
**विशेषसामान्ययुक्तं सत्यत्वेनानुभूयते।**
**तथा सति कथं निर्विशेषज्ञानं नृणां न तत् ॥ १२ ॥**

इति। प्रागभाववदादिः उत्पत्तिर्यस्य न विद्यते सोऽयमनादिकालः। तमारभ्य पूर्वोक्तविशेषणविशिष्टस्वाविद्याप[।]दलयावधिस्वान्तर्गर्भितनामरूपभिदाशोभि नानाब्रह्माण्डं, स्वाविद्यापदस्थूलभागाधिष्ठानं विराट्, तत्सूक्ष्मभागाधिष्ठानं हिरण्यगर्भः, बीजभागाधिष्ठानमीश्वरः, तुर्यभागाधिष्ठानं चिच्छब्देन प्रत्यगभिन्नं ब्रह्म सामान्यशब्देन गुणसाम्यं सामान्यविशिष्टा[3] चिदिति चित्सामान्यं साक्षिचैतन्यं तैर्नित्याधिष्ठितं 'कुक्कुटाण्डाकारम्। महदादिसमष्ट्याकारम्। अण्डं

[1] अ. °तल्लयावधि.    [2] अ. नानागर्भाण्ड°.
[3] अ. °विशिष्टं.

भागः, पृ. ३५, ३०८, ३१४, ३१८, ३६६; सामान्यवेदान्त°, पृ. ३७३; वैष्णव°, पृ. १३६).



तपनीयमयम्। तप्तजाम्बूनदप्रभम्। उद्यत्कोटिदिवाकराभम्। चतुर्विधसृष्ट्युपलक्षितम्। महाभूतैः पञ्चभिरावृतम्। महदहंकृतितमोभिश्च मूलप्रकृत्या परिवेष्टितम्। अण्डभित्तिविशालं सपादकोटियोजनप्रमाणम्। अण्डप्रमाणं परितोऽयुतद्वयकोटियोजनप्रमाणम्। महामण्डूकाद्यनन्तशक्तिभिरधिष्ठितम्। नारायणक्रीडाकन्दुकम्। परमाणुवद् विष्णुलोमसु संलग्नम्। अदृष्टाश्रुतविविधविचित्रानन्तविशेषैरुपलक्षितम्। अस्य ब्रह्माण्डस्य समन्ततः स्थितानि एतादृशान्यनन्तकोटिब्रह्माण्डानि सावरणानि भ्रमन्ति*। चतुर्मुखपञ्चमुखषण्मुखसप्तमुखाष्टमुखादिसंख्याक्रमेण सहस्रावधिमुखान्तैः नारायणांशैः[1] रजोगुणप्रधानैरेकैकसृष्टिकर्तृभिरधिष्ठितानि। विष्णुमहेश्वराख्यैः नारायणांशैः सत्त्वतमोगुणप्रधानैः एकैकस्थितिसंहारकर्तृभिरधिष्ठितानि'[1] इत्यादिश्रुत्यनुरोधेन तत्तदण्डोचितचतुर्मुखपञ्चमुखादिविशिष्टब्रह्मविष्णुरुद्रायुतायुतकोटिभिरन्वितमागाम्यादिविचित्रकर्मत्रयतत्कार्यसदाद्यावरणत्रयभ्रान्तिजादि[2]तादात्म्यत्रयतत्प्रभवपुण्यपापभ्रमैरुज्ज्वलितनानाविधप्राणिजुष्टत्वेन जात्वपि अविद्यमानत्वात् आविद्यकं पदं श्रोत्रादिज्ञानेन्द्रियवेद्यविषयजातं विशेषशब्दार्थः। 'चक्षुषा यत् पश्यति तत् सत्यं भवति'[2] इति श्रुतेः। इन्द्रियनैरपेक्ष्येण केवलान्तःकरणवृत्तिग्राह्यं सामान्यं ताभ्यां विमिश्रितं सत् सत्यत्वेनानुभूयते। तथा स्वानुभूतिप्रमाणसिद्धे सति तदा निरङ्कुशानृताविद्यावृतकरणानां नृणां 'ब्रह्ममात्रमसन्न हि' इति श्रुतिसिद्धनिर्विशेषज्ञानं कथं जायत इति पूर्वपक्षशरीरं, न तद् इत्यादिना सिद्धान्तशरीरं ज्ञेयमित्याह—

[1] अ. °णान्तांशैः.    [2] अ. °जाति°.
* 'ज्वलन्ति' इति मुद्रितपाठः.

[1] कुक्कुटाण्डाकारमित्यारभ्य संहारकर्तृभिरधिष्ठितानीत्यन्तो भागः त्रिपाद्विभूतिनारायणोपनिषदि, ६. ३-७.

[2] दृश्यतां बृहदारण्यके, ४. १. ४: 'चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति, स आह अद्राक्षमिति तत् सत्यं'। भवति 'चक्षुषा यत् पश्यति' इत्ययं भागः अनुवादः

उपेयोपायभेदेन नामचिद् द्विविधेरिता ।
तत्रोपेयनाम सत्तासामान्यमभिधीयते ॥ १३ ॥
नामाभिधानं नामि चिदभिधेयं तयोर्न भित् ।
एवं ज्ञानविभातं यदुपायाभिधनाम तत् ॥ १४ ॥
न ह्युपायं विनोपेयमाप्तुं शक्यं मनीषिभिः ।
तस्मादुपायसर्वस्वं ज्ञात्वानुष्ठानतः परम् ॥ १५ ॥
यज्जन्म चरमं तत्रोपेयनाम चिदात्मकम् ।
उपेयश्रीरामनामतया विद्वान् विशिष्यते ॥ १६ ॥

इति । स्वाविद्यावृतकरणग्रामाणां नृणां निर्विशेषज्ञानं कथमिति चेत्—तन्न । स्वाविद्यापदस्य शशविषाणवदवस्तुत्वेन निर्विशेषब्रह्ममात्रसिद्धेः । तथा सिद्धान्तिते निर्विशेषे ब्रह्मणि[1] अनादिकालमारभ्येत्यादि कथं निर्विशेषज्ञानं नृणामित्यन्तोक्तिः कदापि न युज्यते । तवोक्तेरवस्त्वाश्रयत्वात् कारणतुल्यतां भजेत् । निर्विशेषब्रह्ममात्रज्ञानं यदि वाञ्छसि तदा, असल्लौकिकाद्यष्टदृष्टिषु दृष्टित्रयं विहाय तुरीयदृष्ट्या चित्तशुद्धिमेत्य पञ्चमषष्ठदृष्टिभ्यां भगवत्प्रसादं संपाद्य सप्तमाष्टमदृष्टिभ्यामन्वितो यदि, तदा तवोपायसेवया निर्विशेषज्ञानं सिध्येदित्याह—**उपेयेति** । उपेयाख्यं निर्विशेषं ब्रह्म उपायाख्यं सविशेषमिति भेदेन चिन्मात्ररूपिणी नामचिद् द्विधेरिता । 'प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः '[1] इति श्रुतेः । तत्र

[1] अ. °णि कथं.

स्यात् । ग्रन्थकृता स्वीयोपनिषद्व्याख्यासु अनेकत्र 'चक्षुषा यत् पश्यति तत् सत्यं भवति,' 'तदेव सत्यम्' इत्येवोदाहृतम् । तत्रापि बृहदारण्यकवाक्यानुवाद एव स्यात् । दृश्यतां प्रश्नोपनिषदि तैत्तिरीयोपनिषदि च (अडयार्-प्रकाशनं, दशोपनिषदः, प्रथमो भागः, पृ. १४२, ३४८).

[1] गौडपादकारिका, १. २६.



तयोर्मध्ये उपेयनामस्वरूपमाह—**तत्रेति** । स्वेतरासहसत्तासामान्यमात्रमुपेयनाम भवतीत्यर्थः । उपायनाम निर्दिशति—**नामेति** । नाम केवलमभिधानम् । नामास्यास्तीति नामि । चिदभिधेयं तयोरन्योन्याश्रयत्वात् भेदो न युज्यते । एवं ज्ञानेन यद्विभाति तदेवोपायाख्यनामेत्यर्थः । ममोपेयनामैवालम्, किमुपायनाम्नेत्यत आह—**न हीति** । निगृहीतकरणग्रामैः मनीषिभिरपि परमोपायभूतशबलब्रह्मोपासनं विना स्वाविद्यापदतत्कार्यापह्नवप्रादुर्भूतनिर्विशेषत्वेन प्रसिद्धोपेयचिन्मात्रमाप्तुं न शक्यम् । हिशब्दो निःसंशयार्थः । यस्मादेवं तस्मात् स्वाविद्यापदचतुरंशाधिष्ठानोपायनामसर्वस्वं ज्ञात्वा यथावदनुष्ठानमात्रतः यस्य ते जन्म चरमं भवति, तत्र चरमे जन्मनि स्वातिरिक्तापह्नवात् परमुपेयनामचिदात्मकं यन्निर्विशेषपरमाद्वैतशास्त्रज्ञानं निरावरणं भवेदथ किं शिष्यत इत्यत आह—**उपायेति** । उपायशब्देन विराडादिरुच्यते । तस्याविद्यापदस्य कार्यजातमनन्तकोटिब्रह्माण्डानि तदारोपापवादादिः कलना तत्सर्वापह्नवपूर्वकं विद्वानुपेयश्रीरामनामतयावशिष्यते । 'तदेव शिष्यत्यमलं निरामयम्'[1] इति श्रुतेः ।

निवृत्तस्वातिरिक्तमोहस्य परमाद्वैतशास्त्रज्ञानसमकालं स्वमात्रावशेषलक्षणकैवल्यमुक्त्वा स्वाविद्यावृतदृष्टीनामपि निर्विशेषब्रह्मावगतिः भवितव्येति मनीषया तदुत्पत्त्यन्तरायपुण्यपापोपमर्दकस्वाविद्यापदस्थूलाद्यंशचतुष्टयाधारवैराजात्मकोपाय - नामस्मृतितः सर्वपापनिवृत्तिमुपायनामसूक्ष्मांशस्मृतितः पुण्यादिसंचितकर्माधांशनिवृत्तिमुपायबीजांशस्मृतितः सालोक्यादिमुक्तिचतुष्टयमुपायतुर्यांशस्मृतितः प्रत्यग्ब्रह्मैक्यमुपायनामचतुरंशात्तहेयमात्रापह्नवतो निर्विशेषब्रह्ममात्रावगतिः । तत्फलं तन्मात्रावशेषणं[1] चेत्याह—**स्वाविद्येत्यादि** यावद्ग्रन्थसमाप्ति—

[1] अ. °शेषं चे°.

[1] योगकुण्डली°, ३. ३५.

**स्वाविद्यापदतत्कार्यभ्रमारूढाधिकारिणाम् ।**
**स्वान्तःकरणमालिन्यदोषेणोपायनामचित् ॥ १७ ॥**
**चतुर्धा भिद्यते स्थूलसूक्ष्मबीजतुरीयतः ।**

इति । स्वमात्रावशेषदृष्ट्याविद्यमानं पदं स्वरूपं यस्य तत् स्वाविद्यापदं तस्माज्जातं तत्कार्यमनन्तकोटिब्रह्माण्डपटलं स्वातिरिक्तत्वेनास्तीत्यत्र मानं 'कुक्कुटाण्ड-निभाकारम्'[1] इत्यादिब्रह्माण्डास्तितावादिश्रुतिः । स्वातिरेकतो नास्तीत्यत्र मानं 'ब्रह्मव्यतिरिक्तं न किंचिदस्ति',[2] 'वाचारम्भणं विकारो नामधेयम्'[3] इत्यादिश्रुतिः । स्वव्यतिरिक्तमस्ति नास्तीति विकल्पोऽपि महाभ्रम एव । अवस्तुनि वस्तुतावगमात् । तत्र आरूढभ्रमाणामधमाधमाधममध्यमोत्तमाधिकारिणां स्वान्तःकरणतारतम्यमालिन्यदोषेणोपायनामचित् स्थूलाद्यंशभेदेन चतुर्धा भिद्यत इत्यर्थः ।

अधमाधमाधिकारिणामपि सर्वपापक्षयोपायमाह—

**यस्यान्तःकरणं भूरिपापेन कबलीकृतम् ॥ १८ ॥**
**स चोपायस्थूलनाम स्मरेदघविमुक्तये ।**

इति । [१]यस्याधमाधमाधिकारिणोऽन्तःकरणं तस्य पापसंघातकबलितत्वात् तस्य निष्कृतिर्नास्त्येव । चशब्दोऽप्यर्थः । सोऽपि स्वाघौघमुक्तये स्थूलोपायनाम स्मरेत् । तेन सर्वपापक्षयप्रभवान्तःकरणशुद्धिर्भवति । अपिशब्दस्वारस्यात् स्वल्पपापावृतचित्तो नामस्मृत्या [२]मुच्यत इति वक्तव्यं किमिति द्योत्यते ।

[१] अ. यस्याधमाधिकारिणो. [२] अ. विमुच्यत इति.

---

[1] त्रिपाद्विभूतिनारायण°, ६. ३ 'कुक्कुटाण्डाकारम्' इत्यादि । दृश्यतां च दर्शन°, अथवा जाबालदर्शन°, ४. ४ 'कुक्कुटाण्डवदाकारम्' इत्यादि°.

[2] त्रिपाद्विभूतिनारायण°, ४. ३.

[3] छान्दोग्य°, ६. १. ४.



स्थूलोपायनामचित्स्वरूपं विशदयति—

**स्वाविद्यापदवीनाशयोगवैराजरूपतः ॥ १९ ॥**
**राजमानं महो रामनाम स्थूलचिदुच्यते ।**

इति । स्वदृष्ट्या कदाप्यविद्यमानाविद्यापदवीनाशोऽधिष्ठेयं तदधिष्ठानं वैराज-चैतन्यं, तयोरधिष्ठानाधिष्ठेययोगप्रभववैराजरूपेण सर्वत्र राजमानं महः तेज एव रामनाम स्थूलचिदित्युच्यते ।

वक्ष्यमाणविशेषणविशिष्टवैराजस्मरणप्रकारं तत्फलं चाह **सत्त्वेति** सार्धश्लोकेन—

**सत्त्वसत्त्वतमोपाधिं सर्वतःपाणिमस्तकम् ॥ २० ॥**
**रामं वैश्वानरं ध्यात्वा रामरामेति सर्वदा ।**
**लज्जां हित्वा स्मरणतः सर्वपापक्षयो भवेत् ॥ २१ ॥**

इति । सत्त्वं रजस्तम इति गुणास्त्रेधा भिद्यन्ते । तत्र सत्त्वं त्रेधा विभक्तं चेत् सत्त्वसत्त्वं भवति । तदपि त्रेधा विभक्तं चेत् सत्त्वसत्त्वसत्त्वम् । तथा रजः, तथा तम इति **गुणत्रयविवेके**[1] सम्यगभिहितम् । तत्र सत्त्वसत्त्वतमउपाधिं[१] व्यष्टि-समष्ट्योरेकत्वाभिप्रायेण सर्वतःपाणिपादमस्तकमित्यादिविशेषणविशिष्टवैश्वानरत्वेन रामं ध्यात्वा सर्वदा लज्जां हित्वा रामरामेति नामस्मरणतः सर्वपापक्षयो भवेदिति । अत्र मानम्—

'विसृज्य लज्जां योऽधीते मन्नामानि निरन्तरम् ।
कुलकोटिसमायुक्तो लभते मामकं पदम् ॥'

इति भगवद्वचनम् ।

[१] अ. °तमोपाधिं°.

---

[1] अडयार्-पुस्तकालयेनैव ब्रह्मविद्यापत्रिकायाः २४-तमसंचिकायां प्रकाशितोऽयं ग्रन्थः.

नाम्नः सर्वपापक्षयशक्तिरस्तु ; भगवत्पदप्रापकत्वं कुत इत्यत आह—

**[1] सदा रामेति नामैव स्मरतामघसंचयम् ।**
**निःशेषं नाशयित्वाथ क्रमप्रुक्तिं विधास्यति ॥ २२ ॥**

इति । निःशेषपापनाशे जन्मबीजाभावात् नामैव सालोक्यादिचतुर्विधमुक्तिं विधास्यत्येवेत्यर्थः ।

एवं ब्राह्मणजातिभिः स्मृतं चेत् नामोक्तफलदं नेतरजातिभिरित्याशङ्क्याह—

**स्वान्तःकरणसंभूतसंचिताघनिवृत्तये ।**
**सर्ववर्णैराश्रमिभिः स्मर्तव्यं नाम सर्वदा ॥ २३ ॥**

इति । ब्राह्मणादिसर्ववर्णानां ब्रह्मचर्यादिसर्वाश्रमिणां च स्वान्तःकरणाश्रितसर्वपापसंचयग्रासं नाम विना नास्तीत्यर्थः । स्वाज्ञानां वर्णाश्रमवैषम्येऽपि नामब्रह्मणः सर्वप्रपञ्चाधिष्ठानत्वेन समत्वादित्यर्थः ।

नाम्नो निःशेषाघनिवर्तने संदिहानलोकं प्रति उक्तार्थविपर्यये प्राणान्तिकप्रमाणं करोमीति ऊर्ध्वबाहुः शपथयति—

**नाम कीर्तयतः पुंसो नास्ति पातकमण्वपि ।**
**गृह्णामि तप्तायःपिण्डमहिभाण्डे करं क्षिपे ॥ २४ ॥**

इति ।

सर्वपापघ्नं नामास्तीति अकार्यकारिणां निष्कृतिः क्व इत्यत आह—

**नामस्मर्तुरपापित्वादकार्ये न भवेन्मतिः ।**

इति ।

[1] इत आरभ्य सार्धश्लोकत्रयं कलिसंतरणोपनिषद्व्याख्यायां ग्रन्थकृता उदाहृतम् अडयार्-प्रकाशनं वैष्णवोपनिषदां पुस्तकं १९-२० पृष्ठयोर्द्रष्टव्यताम् । तत्र प्रकृतो नामार्थविवेकग्रन्थश्च नामतो निर्दिष्टः.



'सन्निन्दासति वैभवान्तरकथा श्रीशेशयोर्भेदधी-
रश्रद्धा श्रुतिशास्त्रदेशिकगिरां नाम्न्यर्थवादभ्रमः ।
नामास्तीति निषिद्धवृत्तिविहितत्यागौ च कर्मान्तरैः
साम्यं नामनि शंकरस्य च हरेर्नामापराधा दश ॥'[1]

इति नामापराधदोषस्यानिवार्यतामाशङ्क्याह—

**नामापराधदशकं तं द्रष्टुं वा कथं शकम् ॥ २५ ॥**
**यदि स्पृशेत् प्रमादेन नाम तन्नाशयेत्तराम् ।**

इति ।

अस्मिन् प्रकरणे श्रीरामनाम्नः प्रकृतत्वात् तारकरूपत्वाच्च गणपत्यादिनामतो वैशिष्ट्यं तापनीयश्रुत्यवष्टम्भेनाह—

**गाणपत्यशैवशाक्तसौरवैष्णवनामसु ॥ २६ ॥**
**रामनाम्नः फलाधिक्यमाहुस्तारकरूपतः[2] ।**

इति ।

तदर्थे रहस्यश्रुतिं प्रमाणयति—

**'राम एव परं ब्रह्म राम एव परं तपः ॥ २७ ॥**
**राम एव परं तत्त्वं श्रीरामो ब्रह्म तारकम्'[3] ।**

इति । रामशब्देन प्रत्यगभिन्नं ब्रह्मोच्यते । स्वात्तविशेषापह्नवतस्तदेव परं ब्रह्म स्वपदप्राप्तिसाधनं कृच्छ्रचान्द्रायणादिकं निर्विशेषब्रह्मविचारात्मकं तपो ज्ञानमपि

[1] बोधेन्द्रविरचिते नामामृतरसायने (तञ्जापुर-प्रकाशनं—१९२६, पृ. ३८) अभियुक्तवचनत्वेनोदाहृतोऽयं श्लोकः । तत्र द्वितीयोऽपराधः 'असति नामवैभवकथा' इति पठितः.

[2] रामोत्तरतापिनी°, ५. ६. तत्र क्वचिन्मुद्रितपाठः—'गाणपत्येषु शैवेषु' इति.

[3] रामरहस्य°, १. ६.

तदेव ज्ञानगोचरं तत्त्वं स्वरूपमपि तदेव सर्वजन्तूनां, ‘ गर्भजन्मजरामरणसंसारमहद्भयात् संतारयति ’[1] इति श्रुत्यनुरोधेन सर्वप्राणिभवार्णवतारकमपि नाम ब्रह्मेत्यर्थः ।

एवं श्रुतिप्रमाणतः रामनामतुल्यं नास्तीत्याह—

**इति श्रुतेस्तच्छ्रीरामनामतुल्यं न विद्यते ॥ २८ ॥**

इति ।

नारायणशिवमन्त्राणां तारकत्वेन विद्यमानत्वात् रामनामतुल्यं नास्तीति कथमित्यत आह **नारायणेति** सार्धचतुर्भिः—

**नारायणाष्टाक्षरे तु रामनामाद्यवर्णकम् ।**
**न योजितं यदि तदा नायनाय मनुर्भवेत् ॥ २९ ॥**

इति । ‘ ओं नमो नारायणाय ’ इति अष्टाक्षरे रामनामाद्यवर्णरेफयोजनाभावेऽयं मनुः नायनाय न मोक्षाय भवेत् ।

**दिव्यश्रीशिवपञ्चार्णे रामनामान्त्यवर्णकम् ।**
**न योजितं यदि तदा न शिवाय भवेन्मनुः ॥ ३० ॥**

इति । ‘ नमः शिवाय ’ इत्यत्र मकारयोजनाभावे न शिवाय न ब्रह्मासये भवति ।

रामनाम्नि[म्नः] प्रातिस्विकाक्षरयोजनतः किं भवेदित्यत आह—

**मनुद्वयं यदा रामनामद्व्यक्षरयोजितम् ।**
**तदा शिवायायनाय भवत्येव न संशयः ॥ ३१ ॥**
**शिवनारायणमनुमुक्तिदापनशक्तिदम् ।**
**तस्मात् प्राधान्यतो नाम स्मरतां मुक्तिदापने ॥ ३२ ॥**
**शक्तिरस्तीति किं चित्रं स्मर्तॄन् नामोद्धरेत् क्षणात् ।**

[1] रामोत्तरतापिनी°, २. ३.



इति । यस्मात् रामनाम शिवनारायणमन्वोरपि स्वजप्तृमुक्तिदापनशक्तिदं भवति तस्मात् प्राधान्यतः स्मर्तॄणां [१]स्वस्वरूपावरकस्वाज्ञानमुक्तिदापकशक्तिरस्तीति किं चित्रम् । सदा सकृद्वा स्मर्तॄन् जीवान् क्षणमात्रेण नामोद्धरेदेवेत्यर्थः ।

नामस्मर्तुरिह लोके परत्र वा दुर्लभं किमपि नास्तीत्याह—

**हृद्देशे येन सततं स्मृतं तेन महात्मना ॥ ३३ ॥**
**साधितं भगवत्तत्त्वं तस्य किं दुर्लभं भवेत् ।**

इति । सदा नामस्मृतितः ऐहिके साधुजनसंमाननम् आमुष्मिकेऽपि हृद्देशे संततनामस्मृत्युत्थचित्तशुद्धिप्राप्यज्ञानद्वारा भगवतस्तत्त्वं निर्विशेषचिन्मात्रस्वरूपं साधितं यदि तदास्य स्मर्तुः किं दुर्लभम् ? सर्वं संपन्नमित्यर्थः ।

चरमश्वासवेलायां नामस्मरणफलमाह—

**चरमश्वासवेलायां राम रामेति यः स्मरेत् ॥ ३४ ॥**
**स निर्धूताघनिचयो मुक्तिमेति न संशयः ।**

इति । प्राणोत्क्रमणसमये महापातकिनापि अवशेन सकृत् रामेति नाम स्मृतं चेत् स महापुरुषो निर्धूताघनिचयो भूत्वाथ सालोक्यादिचतुर्विधमुक्तिमेतीत्यत्र संशयो न कार्य इत्यर्थः ;

‘ अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ’[1]

इति स्मृतेः ।

[१] अ. स्वस्वरूपावारक°.

[1] भगवद्गीता, ८. ५.

स्वशरीरोत्पत्तिमारभ्य शरीरपातादर्वाक् यदा कदा[१] वापि अवशात् स्मृतनामफलमाह—

रामचन्द्रेत्येकवारमनिच्छास्मृतिमात्रतः ॥ ३५ ॥
यावन्नश्येत् पापवृन्दं कल्पकोटिशतैः कृतम् ।
तावत् कर्तव्यमित्येव दृढनिश्चयपूर्वकम् ॥ ३६ ॥
कोटिकोटिकोटिजन्मशतेनापि प्रयत्नतः ।
तावत् कर्तुं समर्थः कः सर्वज्ञ वद सोऽस्ति चेत् ॥ ३७ ॥
अस्तीत्येवं वदसि चेन्नाम ते पापघातुकम् ।
न भवेद्दुर्बलत्वात् तत् तदा भवतु मे जनिः ॥ ३८ ॥
नास्तीत्येवं यदि मतं सफलो मम निश्चयः ।
तस्मादहं कोटिजन्मपापवृन्दापनुत्तये ॥ ३९ ॥
श्रीरामचन्द्र ते नाम बुद्धिपूर्वं जपन् स्थितः ।

इति । जन्ममध्येऽवशात् सकृन्नामस्मृतितः कृत्स्नपापशान्तिरुक्ता । बुद्धिपूर्वकसदास्मरणे [२]किं वक्तव्यमित्यर्थः ।

कालहरणार्थं सदा स्मरणं, त्रिवारनामस्मृतितः आगाम्यादिकर्मत्रयसदाद्यावृतित्रयतद्धेतुस्वाविद्यानाशं चाह—

त्रिवारं रामनामाशु स्मृत्वा कर्मत्रयान्विताम् ॥ ४० ॥
आवृतित्रयतद्धेतुस्वाविद्यां नाशयाम्यहम् ।

इति [1]श्रीरामतरङ्गचन्द्रिकायामुदाहृतमिति रामस्य निर्विशेषचिन्मात्रत्वात् तत्स्मृतेरागाम्यादिकर्मत्रयसदाद्यावृतित्रयभ्रान्तिजादितादात्म्यत्रयापह्नवपूर्वकत्वात् ॥

[१] अ. कदापि. [२] किं कर्तव्यमिति उ. ब्र. मठमातृकायाम्.

[1] ग्रन्थकृतैव विरचितायाम्, क्वचिन्मातृकायां तरङ्गचन्द्रोदयेति ख्यातायाम्.



एवं सकृत् स्मृतिरेवालम् । स्वमात्रावशेषणसाम्राज्ये किमनेन द्विवारोच्चारितनाम्नेत्यर्थस्तु परमाद्वैतपक्षे युज्यते । इतरपक्षे तु एकवारस्मृत्या क्रमेण सर्वपापनाशः । पुनः द्वितीयवारस्मृत्या क्रमेणावृतित्रयनाशः । तृतीयवारस्मृत्या क्रमेण स्वाविद्यानाशोऽपि भवति ।

प्रबलप्रारब्धवशात् एतज्जन्मनि [१]त्रिवारनामस्मृतिफलेऽप्राप्ते द्वात्रिंशज्जन्मनोऽर्वागेवासह्लौकिकाद्यष्टदृष्टिषु अन्त्यदृष्टयवष्टम्भनद्वारा कृतकृत्यो भवतीत्यस्मिन्नर्थे श्रुतिस्मृतिपूगं प्रमाणयति—

अस्मिन्नर्थे प्रमाणानि श्रुतयः सन्ति कोटिशः ॥ ४१ ॥
स्मृतयश्च तथा भूरि निश्चयं यान्तु भूसुराः ।

इति । एवं भवति न वा इत्याकारकसंशयजालं छित्त्वा कोटिश्रुतिस्मृतिसंमतत्वात् एतत्पक्षावलम्बेन कृतकृत्या भवाम इति भूसुराः परमनिश्चयं यान्त्वित्यर्थः ।

श्रुतिततिमनुक्रामति—

[1]‘कृतं दिने यद्दुरितं पक्षमासर्तुवर्षजम् ॥ ४२ ॥
सर्वं दहति निःशेषं तूलाचलमिवानलः’ ।

इति । दिनपक्षमासर्त्वयनवत्सरशताब्दकृतपापजातं सकृत्स्मृतनाम यथानलः तूलाचलं भस्म करोति तथेत्यर्थः ।

पापजातेयत्तामाह—

‘ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥ ४३ ॥

[१] °वार इति उ. ब्र. मठमातृकायाम्.

[1] इत आरभ्याष्टौ श्लोका ग्रन्थकृतैव स्वीयकलिसंतरणोपनिषद्व्याख्यायाम् (अडयार्-प्रकाशनं, पृ. १७) अनयैव अवतारिकया सहोदाहृताः । एते श्लोकाश्च रामोत्तरतापिन्यां द्रष्टव्याः—५. ९-११; २१-४; २. १८.

स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ।
कोटिकोटिसहस्राणि उपपातकजान्यपि ॥ ४४ ॥
सर्वाण्यपि प्रणश्यन्ति रामनामानुकीर्तनात्' ।

इति । ज्ञानपूर्वकं कृतब्रह्महत्यादिपापानां भगवन्नाम्न ऋते निष्कृतिर्नास्तीत्यर्थः । प्रयागादितीर्थोक्तप्रायश्चित्तैः सर्वपापनिवृत्तिः श्रूयते । किं नाम्ना इत्यत आह—

'यत् प्रयागादितीर्थोक्तप्रायश्चित्तशतैरपि ॥ ४५ ॥
नैवापनोद्यते पापं तदप्याशु विनाशयेत्' ।

इति । तादृशप्रायश्चित्ताक्षीणपापमपि लीलया सकृदुच्चरितनाम निर्मूलयेदित्यर्थः ।

बुद्धिपूर्वकं पुण्यक्षेत्रकृतपापस्य कदापि निष्कृतिर्नास्तीत्यत आह—

'पुण्यक्षेत्रेषु सर्वेषु कुरुक्षेत्रादिषु स्वयम् ॥ ४६ ॥
बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत्' ।

इति ।

चान्द्रायणाद्यक्षीणपापमपि नामैव [1]नाशयतीत्याह—

'कृच्छ्रैस्तप्तपराकाद्यैर्नानाचान्द्रायणैरपि ॥ ४७ ॥
पापं च नापनोद्यं यत् तदप्याशु विनाशयेत्' ।

इति ।

तुलापुरुषदानाक्षीणपापमपि नाम घातयेदित्याह—

'आत्मतुल्यसुवर्णादिदानैर्बहुविधैरपि ॥ ४८ ॥
किंचिदप्यपरिक्षीणं तदप्याशु विनाशयेत्' ।

इति ।

[1] अ. नाशयेदित्याह.



उत्तमाधिकारिणामैवयानुसन्धानतो भगवद्भावाप्तिमाह—

'सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये ॥ ४९ ॥
न ते संसारिणो नूनं राम एव न संशयः' ।

इति । प्रत्यगभिन्नब्रह्मास्मीत्यनुसन्धानात् प्रत्यगभिन्नं ब्रह्मैव भवतीत्यर्थः ।

'कृतं दिने' इत्यारभ्य 'सदा रामोऽहमस्मि' इत्यन्तं नाममाहात्म्यप्रतिपादकश्रुतिततिं प्रमाणीकृत्य स्मृतिततिमपि प्रमाणयति चतुर्विधेत्यादि—

[1]'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन' ॥ ५० ॥
'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्' ॥ ५१ ॥
'सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते' ॥ ५२ ॥
'तेषामहं समुद्धर्ते' त्येवमादिश्रुतेः[1] स्मृतेः ।

इति । आर्तजिज्ञास्वर्थार्थिज्ञानिभेदेन सुष्ठु कृत्यं मद्भजनरूपं येषां ते सुकृतिनो मां प्रत्यगभिन्नरूपेण सन्तं वासुदेवं [2]स्वाज्ञानतानवतारतम्यानुरोधेन हे भक्तार्तिभञ्जनेति हे भक्तप्रसादकरेति ऐहिकामुष्मिकदारिद्र्यभञ्जनेति स्वेतरग्रासनिर्विशेषचिन्मात्रेति भजन्ते तत्कृतभजनानुरूपफलदोऽस्मीत्यर्थः । तद्यथा 'यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि, एवमोंकारेण सर्वा वाक् संतृण्णा, ओंकार एवेदं सर्वम्'[2] इति श्रुत्यनुरोधेन ओमित्येकाक्षररूपेण स्वकल्पिताभिधानप्रपञ्चोपबृंहणात् एकाक्षरं ब्रह्म,

[1] अ. श्रुतेरिति आर्त°. [2] अ. स्वाज्ञानतारतम्य°.

[1] इदमपि स्मृतिवाक्यजातमेवमेव कलिसंतरणोपनिषद्व्याख्यायां ग्रन्थकृतोदाहृतम् । एते श्लोका भगवद्गीतायां, ७. १६; ८. १३; ९. १४; १२. ७.

[2] छान्दोग्य°, २. २३.

‘कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ।
ओंकारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥’[1]

इति श्रुत्यनुरोधेन व्याहरन् षोडशमात्राकालमुच्चरन् यो मां चिन्मात्ररूपेण प्रत्यगभिन्नब्रह्मरूपेण[१] रुद्रविष्णुब्रह्मरूपेण वानुस्मरेत् स स्मरणानुरूपं स्वमात्रावशेषत्रिपाद्रूपां नित्यभूतिरूपां लीलाभूतिरूपां परमां गतिं याति । सततमनवरतं जीवेशभेदमादाय दासोऽहमिति स्थूलसूक्ष्मचिदचिदन्तर्याम्यैक्यमादाय सोऽहमिति व्यष्टिसमष्टिप्रपञ्चापवादाधारप्रत्यगभिन्नं ब्रह्मास्मीति निर्विशेषब्रह्ममात्रं ‘असन्न हि’ इति वा मामुत्तमाधिकारिणश्चिन्तयन्तः[२] सन्तः स्वस्वमतसिद्धान्तरूपं मां प्रतिपद्यन्ते । केचन मध्यमाधिकारिणः स्वस्वमतसिद्धान्तसाधने दृढव्रताः सन्तो नित्यं यतन्ते । केचन मन्दाधिकारिणो नित्ययुक्ता भूत्वा

‘ईश्वरो जीवकलया प्रविष्टो भगवानिति’ ।[2]
‘प्रणमेद्दण्डवद् भूमावाश्वचण्डालगोखरम्’ ।[3]

इति श्रुत्य[स्मृत्य]नुरोधेन सर्वप्राणिजातं मद्बुद्ध्या परया भक्त्या नमस्यन्तश्च सन्तो मामुपासते । एवमाद्यनेकप्रकारेण ये मां भजन्ते तत्तद्भावानुरोधेन तेषामहं समुद्धर्ता भवामीत्यत्र संशयो न कार्य इत्यर्थः । आदिशब्देन, सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते, ‘तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।’[4] इत्यादिश्रुतिस्मृतयो गृह्यन्ते ।

[१] अ. ब्रह्मरूपेणेत्यत आरभ्य नित्यभूतिरूपामित्यन्तो भागो नास्ति.
[२] अ. कीर्तयन्तः.

---

[1] ब्रह्मविद्योप°, १२ (अड्यार्-प्रकाशनं—योगोपनिषदः, पृ. २५१).
[2] श्रीमद्भागवते, ३. २९. ३४. [3] तत्रैव, ११. २९. १६.
[4] भगवद्गीता, ८. ७.



यया कया वा विधया स्मृतनामपरमफलमाह—

**विवशेन प्रयत्नेन[१] ज्ञानेनाज्ञानतोऽपि वा ॥ ५३ ॥**
**नामस्मरणतोऽपापो विद्वानमृतमश्नुते ।**

इति । नामस्मृतितो विपापो भवति । उपेयनाम यथा यथा वेत्ति[२] इति विद्वान्, तथा तथामृतमश्नुते मुक्तो भवतीत्यर्थः ।

एवंविधा शक्तिः नाम्नः क्व इति संदिहानं प्रत्याह—

**मयोक्तं सकलं नार्थवादः सत्यं न संशयः ॥ ५४ ॥**

इति । मया लीलाभूत्या उपायोपेयात्मकनामस्वरूपं तन्माहात्म्यं वा सप्रमाणं यद्यदुक्तं तत्तत् सत्यम्,

‘इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ।
रामः सत्यं परं ब्रह्म रामात् किंचिन्न विद्यते ॥’[1]

इति स्मृतेः । एवं श्रुतिस्मृतिततिसिद्धान्तरूपे मद्वाक्ये नार्थवादशङ्का कार्येत्यर्थः ।

विपक्षे कदापि परमार्थवैरल्यमाह—

**श्रीरामनाम्न्यर्थवादं संभावयति यो नरः ।**
**स महापातकिभ्योऽपि वरिष्ठ इति कीर्तितः ॥ ५५ ॥**

इति । भगवन्नाम्नि अर्थवादं मन्यमानस्य निष्कृतिः कदापि नास्तीत्यर्थः ।

तादृशाघशान्तिदं नाम विना नास्तीत्याह—

**तत्पापशान्तये नाम विनान्यन्न हि विद्यते ।**

इति ।

[१] अ. प्रयुक्तेन. [२] अ. विन्दत इति.

---

[1] वराहोप°, २. ३८.

एवं निश्चितनामज्ञानफलमाह—

इति श्रुतिस्मृतिशतप्रमाणज्ञानवान् मुनिः ॥ ५६ ॥
श्रीरामसारूप्यमुक्तिं सायुज्यं वैति नान्यथा ।

इति । इत्येवं निखिलश्रुतिस्मृतिप्रमाणतो नाम विना धर्माद्यखिलपुरुषार्थसाधकं किंचिन्नास्तीति ज्ञानं यस्यास्ति स्वस्वभावानुरोधेन स मुनिः सालोक्यसामीप्यसारूप्यसायुज्यमुक्तिं प्राप्नोति । नान्यथास्मिन्नर्थे चिन्तनीयमित्यर्थः ।

यावद्वैराज[जं]नाम स्मर्तव्यमित्यत्रावधिमाह—

यावत् पश्यति वैराजरूपं सर्वत्र सर्वदा ॥ ५७ ॥
तावदित्थं स्मरेन्नाम मनसा वचसाथवा ।

इति । एवमुपायनामस्मर्तुः पुरुषसूक्तार्थवैराजसाक्षात्कारो [यावत्] भवति, तावन्मनसा वचसा वोपायस्थूलनाम सदा स्मरेदित्यर्थः ।

तादृशसिद्ध्यनन्तरं किं भवतीत्यत आह—

ततस्तूपायसूक्ष्मांशनामस्मरणधीर्भवेत् ॥ ५८ ॥

इति ।

उपायसूक्ष्मनामस्वरूपं विशदयति—

स्वाविद्यापदसूक्ष्मांशयोगसूत्रस्वरूपतः ।
राजमानं महो रामनाम सूक्ष्मचिदुच्यते ॥ ५९ ॥

इति । स्वदृष्ट्याविद्यमानपदसूक्ष्मांशयोगत्वेन सूचनात् सूत्रं हिरण्यगर्भचैतन्यमुच्यते । तद्रूपेण सर्वदा राजमानं महो रामनामसूक्ष्मचिदित्यभिधीयते । पूर्वोक्तस्थूलनामस्मृतिपूर्वकं सूक्ष्मनामापि स्मर्तव्यम् ।



किंविशेषणविशिष्टं ध्यात्वा स्मर्तव्यमित्यत आह—

सत्त्वसत्त्वरजोपाधिं सर्वलिङ्गाभिमानिनम् ।
स्वविकल्पितवैराजतत्कार्यग्रासपूर्वकम् ॥ ६० ॥
सूत्रात्मभावमापन्नं श्रीरामं करुणानिधिम् ।
ध्यात्वा पूर्वोक्तविधया रामनाम सदा स्मरेत् ॥ ६१ ॥

इति । वैराजतत्कार्यकलनापह्नवशिष्टं[1] सत्त्वसत्त्वप्रविभक्तराजसगुणोपाधित्वेन समष्टिलिङ्गशरीराभिमानित्वेन च सूचनात् सूत्रात्मभावमापन्नं श्रीरामं भजद्भक्तालिकरुणानिधित्वेन ध्यात्वा पूर्वोक्तप्रकारेण रामनाम मनसा उपांशूच्चारणेन सदा स्मरेदित्यर्थः ।

यावदेवं स्मर्तव्यमित्याशङ्क्यावधिमाह—

यावद्धृदि बहिर्देशे चान्तराले तयोरपि ।
सूत्राख्यश्रीरामनाम स्वरूपेण प्रकाशते ॥ ६२ ॥
तावच्छ्रीरामरामेति मनसा नाम संस्मरेत् ।

इति ।

ततः किं भवतीत्यत आह—

ततस्तूपायबीजांशनामस्मरणधीर्भवेत् ॥ ६३ ॥

इति ।

[2]सूक्ष्मनामापवादशिष्टबीजनामस्वरूपं सप्रकारं कर्तव्यावधिं फलं चाह—

स्वाविद्यापदबीजांशयोगबीजस्वरूपतः[3] ।
राजमानं महो रामनामबीजचिदुच्यते[4] ॥ ६४ ॥

[1] अ. अपवादशिष्टं.
[2] अ. सूक्ष्मनामापह्नव°.
[3] अ. °शबीजशक्तिस्वरूपतः.
[4] अ. बीजं तदुच्यते.

सत्त्वसात्त्विकसत्त्वाङ्गं सार्वज्ञ्यादिगुणैर्युतम् ।
स्वकल्पितविराट्सूत्रप्रपञ्चग्रासपूर्वकम् ॥ ६५ ॥
बीजमात्रतया शिष्टं सर्वकारणवैभवम् ।
निर्हेतुकदयासिन्धुं रामं ध्यात्वा दिवानिशम् ॥ ६६ ॥
पूर्वपर्यायगदितरामनाम सदा स्मरेत् ।
यावच्छ्रीरामनामार्थः प्रत्यक्परविभागतः ॥ ६७ ॥
भवेत् करामलकवत् तावन्नाम स्मरेद् बुधः ।

इति । स्वाविद्यापदबीजांशयोगसिद्धबीजेश्वरस्वरूपतो राजमानं महस्तदेव रामनाम बीजचिद्भवति । तत्स्वरूपं विशदयति—सत्त्वेति । सत्त्वसात्त्विकसत्त्वोपाधिलब्धसर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वाद्यनन्तकल्याणगुणविशिष्टं स्वविकल्पितविराट्सूत्रप्रपञ्चतत्कार्यापह्नवतो[1] बीजमात्रतया सर्वकारणत्वादिवैभवविशिष्टं सन्निर्हेतुकदयापारावाररूपं रामं दिवानिशं ध्यायन् प्रथमपर्यायोक्तरामनाम सदा स्मरेत् । यावत् श्रीरामनामार्थः प्रकाशते तावत् स्मर्तव्यमित्यर्थः ।

रामनामार्थः क इत्याशङ्क्य प्रत्यग्ब्रह्मैक्यमित्याह—

तदर्थो रेफ आम्नातस्त्वमर्थो मार्ण उच्यते ॥ ६८ ॥
रार्णेन मार्णसंयोगो भवेदसिपदार्थकः ।

इति ।

रामार्णयोः वाच्यलक्ष्यार्थौ विभज्य दर्शयति—

रवाच्यमीशचैतन्यं रलक्ष्यं सत्यचित्सुखम् ॥ ६९ ॥
मवाच्यं जीवचैतन्यं मलक्ष्यं प्रत्यगीरितम् ।

इति ।

[1] अ. °पह्नादतो.



रामवाच्यार्थत्यागपूर्वकं रामलक्ष्ययोरैक्यं प्रतिपादयति—

विषमोपाधितो रामवाच्ययोर्नैक्यमिष्यते ॥ ७० ॥
रामार्णवाच्यापवादाधारलक्ष्यचिदात्मनोः ।
सामानाधिकरण्येन तयोरैक्यं श्रुतीरितम् ॥ ७१ ॥

इति ।

तत्र रामरहस्यश्रुतिं प्रमाणयति—

'आद्यो रा तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान् ।
तयोः संयोजनमसीत्यर्थे तत्त्वविदो विदुः'[1] ॥ ७२ ॥
ब्रह्मात्मैव भवेदात्मा ब्रह्मैवात्मा न संशयः ।
एवं विचार्य नामार्थं श्रुत्याचार्यप्रसादतः ॥ ७३ ॥
ततस्तूपायतुर्यांशनामानुष्ठानधीर्भवेत् ।

इति । रामलक्ष्यैक्यं तत्त्वमस्यर्थश्रुतितो बुद्ध्वा 'सत्यमात्मा ब्रह्मैव, ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यम्'[2] इत्यादिश्रुत्यनुरोधेन 'ब्रह्माहमहमेव ब्रह्म' इति श्रुत्याचार्यप्रसादतो निःसंशयं नामार्थं विचार्य तत्र स्वानुभवानन्तरमुपायतुर्यांशनामानुष्ठानं कर्तव्यमिति धीर्भवेदित्यर्थः ।

अथोपायतुर्यनामस्वरूपं तत्फलं चाह—

स्वाविद्यापदतुर्यांशयोगसाक्षिस्वरूपतः ॥ ७४ ॥
राजमानं महो रामनाम तुर्यचिदुच्यते ।
चित्सामान्योपाधिलब्धसर्वसाक्षिस्वरूपकम् ॥ ७५ ॥
स्वकल्पितविराट्सूत्रबीजतत्कार्यविभ्रमम् ।

[1] रामरहस्योप°, ५. १३-१४ (अडयार्-प्रकाशनं, वैष्णवोपनिषदः, पृ. ३७२).
[2] नृसिंहतापिन्याम् उत्तर°, ९. १७.

कबलीकृत्य तत्सर्वाधारत्वेनावशेषितम् ॥ ७६ ॥
सर्वोदासीनचैतन्यमपि भक्तावनोत्सुकम् ।
श्रीरामनामसाम्राज्यं स्वाभेदेनैव भावयेत् ॥ ७७ ॥
यावत् समस्ताधिष्ठानसाक्ष्यस्मीति दृढा मतिः ।
सरूपविलयं याति तावदेवं विभावयेत् ॥ ७८ ॥
शास्त्रजज्ञानविज्ञानसम्यग्ज्ञानप्रभावतः ।
कर्मत्रयत्र्यावरणभागत्रयलयोद्भवम् ॥ ७९ ॥
वित्त्वं वरत्वं वर्यत्वमेत्य साक्षी भवेन्मुनिः ।

इति । स्वज्ञदृष्ट्याविद्यमानपदतुर्यांशयोगप्रभवसाक्षिरूपेण राजमानं यन्महो विजयते तदेव रामनाम तुर्यचिदुच्यते । तद्रूपं किमित्यत आह—गुणसाम्योपाधिलब्ध-साक्षिस्वरूपेण स्वस्वरूपवैपरीत्येन कल्पितविराड्ढिरण्यगर्भेश्वरतत्कार्याखिलविभ्रमं स्वावशेषेण कबलीकृत्य तत्सर्वापवादाधारत्वेनावशेषितं सत् स्वभावतः सर्वोदा-सीनस्वभावमपि स्वानन्यभक्तावल्यवनकर्मणि नित्यं दीक्षितमुपायतुर्यात्मकश्रीराम-नामसाम्राज्यं प्रत्यगभेदेन नित्यं भावयेत् । यावत् समस्तापवादाधिष्ठानसाक्ष्य-स्मीति दृढा मतिः अखण्डाकारवृत्तिरपि पुनर्व्युत्थानयोग्यतया स्वात्तवृत्तिकलिता सती · सरूपविलयं भजति, तावदेवं रामोऽहमहमेव राम इति भावयेत् । उपायतुर्यांशसाधको मुनिः उपायतुर्यांशशास्त्रजन्यज्ञानेन आगामिकर्म, सदावरण-भ्रान्तिजतादात्म्यस्थूलभागोपमर्दकब्रह्मवित्त्वमासाद्याथ मननप्रादुर्भूतविज्ञानेनागामि-संचितकर्म, सच्चिदावरणभ्रान्तिजसहजतादात्म्यार्धांशोपमर्दकब्रह्मविद्वरत्वमासाद्याथ निदिध्यासनप्रभवसम्यग्ज्ञानेनागामिसंचितप्रारब्धकर्म, सच्चिदानन्दावरणभ्रान्ति-जसहजकर्मजभागत्रयोपमर्दकब्रह्मविद्वरीयस्त्वमेत्यार्धमात्रोपाधिविशिष्टः प्रत्यगभिन्न-ब्रह्मस्वरूपावस्थानलक्षणः सर्वसाक्षी विद्वान् भवेदित्यर्थः ।



उपायनामतुर्यांशनिष्ठाद्वैतसिद्धान्तं प्रतिपाद्य[१] परमाद्वैतबुद्ध्यारोहाया-द्वैतावगतिफलं परमाद्वैतसिद्धान्तं तदवगतिफलं च दर्शयति—**सर्वेतिसार्ध-चतुर्भिः**—

सर्वाधारतया शिष्टसाक्ष्याप्तिर्यदि रोचते ॥ ८० ॥
तदा तद्रूपेण तिष्ठ सर्वाधिष्ठानसाक्षिणः ।
सत्तासामान्याप्तिकाले यास्यसि त्वं पराद्वयम् ॥ ८१ ॥

इति । एवमुक्तप्रकारेण स्वकल्पितसर्वापवादाधारतया शिष्टप्रत्यगभिन्नब्रह्माप्तिः यदि[२] ते रोचते, तदा प्रत्यगभिन्नब्रह्मरूपेण तिष्ठ । निर्विशेषब्रह्माप्तिर्मे कदा इत्यत आह—**सर्वेति** । सर्वापवादाधिष्ठानसाक्षिणः निर्विशेषब्रह्ममात्रावस्थान-लक्षणसत्तासामान्याप्तिकाले[३] त्वं पुरा द्वैती परमाद्वयं स्वमात्रत्वेन यास्य-सीत्यर्थः ; 'परामृताः परिमुच्यन्ति सर्वे'[1] इति श्रुतेः ।

तावत्कालविलम्बमसहमानमालक्ष्याह [४]**इदानीमिति**—

इदानीं ते यद्युपेयनामब्रह्मावशेषधीः ।
भवेत् तदोपायनामचतुर्भागसमन्वितम् ॥ ८२ ॥
स्वाविद्यापदतत्कार्यजातं शशविषाणवत् ।
ज्ञात्वात्यन्तासत्त्वमिति नित्यभावस्वरूपकम् ॥ ८३ ॥
विकलेबरकैवल्योपेयनामस्वरूपतः ।
परमाद्वैतरूपेण शिष्यसे नात्र संशयः ॥ ८४ ॥

[१] अ. प्रतिपद्य. [२] अ. यदि रोचते.
[३] अ. °न्यापत्तिकाले. [४] अ. इदानीमिति प्रतीकं नास्ति.

---

[1] मुण्डक°, ३. २. ६; महानारायण°, ५. ६.

इति । हे विद्वन् इदानीं ते यदि सद्योमुक्तिप्रापकोपेयनामब्रह्ममात्रावशेषधीः भवेत् तदा उपायनाम स्थूलादिचतुर्भागसमन्वितं स्वाविद्यापदतत्कार्यजातं शशविषाणवदत्यन्तासदिति [१]ज्ञात्वाज्ञानसमकालं नित्यभावस्वरूपत्वेन विद्यमानविकलेबरकैवल्याख्योपेयनामस्वरूपपरमाद्वैतरूपेणावशिष्यसे । तत्र संशयो न कार्य इत्यर्थः ।

परमाद्वैतज्ञानसमकालं निर्विशेषब्रह्ममात्रतयावशेषलक्षणकैवल्याप्तिवादिश्रुतिं प्रमाणयति—

**निर्बीजब्रह्मविज्ञानसमकालं महामुनिः ।**
**निर्बीजसत्तासामान्यब्रह्मैव भवति श्रुतेः ॥ ८५ ॥**

इति । अतदपह्नवसिद्धं यन्निर्विशेषचैतन्यं तन्निर्बीजं ब्रह्म यदा विदुषो 'ब्रह्ममात्रमसन्न हि' इति ज्ञानं जायते तज्ज्ञानप्रादुर्भावसमकालं महद्भिः ब्रह्मात्मविद्वरिष्ठत्वेन योऽनुमीयते स महामुनिर्विद्वान् निर्बीजत्वेन प्रसिद्धं यत् सत्तासामान्यं ब्रह्म तदेव भवति । 'ब्रह्मविदाप्नोति परम्'[1], 'तमेवं विद्वानमृत इह भवति'[2], 'ब्रह्म वेद ब्रह्मैव भवति'[3] इत्यादिश्रुतेः ।

अस्य ग्रन्थस्य लीलाभूतिफणितत्वमाह—

**श्रीवासुदेवेन्द्रशिष्यरामचन्द्रेन्द्रयोगिना ।**
**उपेयश्रीरामनामपरमार्थौ निरूपितः ॥ ८६ ॥**

इति । उपायनामभागत्रयं द्वैतं तत्तुर्यभागोऽद्वैतम्, उपेयनाम्नो निरंशत्वेन [२]परमार्थत्वमुचितमित्यर्थः ।

[१] अ. '°ज्ञान°' इति नास्ति. [२] अ. परमार्थतत्त्व°.

---

1 तैत्तिरीय°, २. १. १. 2 त्रिपाद्विभूतिमहानारायण°, ४. ५.
3 मुण्डक°, ३. २. ९.



एतत्प्रकरणार्थज्ञानफलमाह—

**य इत्थं रामनामार्थं ज्ञात्वा नाम स्मरेत् सदा ।**
**स याति परमाद्वैतमहासाम्राज्यवैभवम् ।**

इति । यः साधको मुनिः, इत्थंप्रकारेणोपायस्थूलांशस्वरूपज्ञानपूर्वकं यो नाम स्मरति तस्य सर्वपापनिवृत्तिः । यः पुनरुपायसूक्ष्मांशस्वरूपज्ञानपूर्वकं भगवन्नाम स्मरति तस्य पुण्यपापादिनिर्लेपता फलं भवति । यः पुनः उपायबीजांशस्वरूपज्ञानपूर्वकं भगवद्दिव्यनाम स्मरति[१], जीवेशभेदेन नाम स्मर्तुः सालोक्यसामीप्यमुक्तिः फलं, स्थूलसूक्ष्मचिदचिदन्तर्याम्यैक्यभावनया नाम स्मर्तुः सारूप्यसायुज्यमुक्तिः फलम् । यः पुनः उपायतुर्यांशस्वरूपज्ञानपूर्वकं भगवद्दिव्यनाम स्मरति, तस्य व्यष्टिसमष्टिप्रपञ्चापवादाधिष्ठानप्रत्यक्परचिदैक्यलक्षणमुक्तिः फलं भवति । यः पुनः उपायभूतनामस्थूलसूक्ष्मबीजतुर्यांशगतहेयांशापह्नवज्ञानपूर्वकं स्वमात्रावशेषेणोपेयनाम नित्यभावरूपं तदतिरिक्तोपायनामचतुरंशतत्कार्यजातं शशविषाणवदत्यन्ताभावरूपं न तयोराधाराधेयता इति ब्रह्ममात्रं जानाति स परमाद्वैती परमाद्वैतमहासाम्राज्यमेति । तद्रूपेणावशिष्यत इत्यर्थः ॥

ग्रन्थसंख्यां विशदयति—

**सप्ताशीतिग्रन्थयुता श्रीनामार्थविवेकचित् ॥ ८७ ॥**

इति ।

'चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति भावयेत् ॥'[1]

इत्यादिश्रुतितः एतत्प्रकरणस्यापि चित्त्वमुपपद्यत इत्यर्थः ।

[१] अ. 'स्मरति' इत्यारभ्य '°भावनया नाम' इत्यन्तं नास्ति.

---

1 वराहोप°, २. ४७.

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
उपेयनामविवेकव्याख्येयं लिखिता मुदा ॥

ओं श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्रार्पणमस्तु
उपेयनामव्याख्येयमशीत्यधिशतत्रयम्[1]

ओं त्रैपदब्रह्मणे नमः[2]

---

[1] अ. °धिकशतत्रयम्.
[2] अ. अस्य स्थाने 'श्रीरामचन्द्राय नमः' इति वर्तते.